## ॥ श्रीनृसिंहाष्टोत्तरशतनामस्तोत्रम् ॥

॥ श्रीः ॥

श्रीनृसिंहो महासिंहो दिव्यसिंहो महाबलः ।
उग्रसिंहो महादेव उपेन्द्रश्चाऽग्निलोचनः ॥ १॥

रौद्रश्शौरिर्महावीरस्सुविक्रम-पराक्रमः ।
हरिकोलाहलश्चक्री विजयश्चाजयोऽव्ययः ॥ २॥

दैत्यान्तकः परब्रह्माप्यघोरो घोरविक्रमः ।
ज्वालामुखो ज्वालमाली महाज्वालो महाप्रभुः ॥ ३॥

निटिलाक्षः सहस्राक्षो दुर्निरीक्ष्यः प्रतापनः ।
महादंष्ट्रायुधः प्राज्ञो हिरण्यकनिषूधनः ॥ ४॥

चण्डकोपी सुरारिघ्नस्सदार्तिघ्न-सदाशिवः ।
गुणभद्रो महाभद्रो बलभद्रस्सुभद्रकः ॥ ५॥

कराळो विकराळश्च गतायुस्सर्वकर्तृकः ।
भैरवाडंबरो दिव्यश्चागम्यस्सर्वशत्रुजित् ॥ ६॥

अमोघास्त्रश्शस्त्रधरः सव्यजूटस्सुरेश्वरः ।
सहस्रबाहुर्वज्रनखस्सर्वसिद्धिर्जनार्दनः ॥ ७॥

अनन्तो भगवान् स्थूलश्चागम्यश्च परावरः ।
सर्वमन्त्रैकरूपश्च सर्वयन्त्रविधारणः ॥ ८॥

अव्ययः परमानन्दः कालजित् खगवाहनः ।
भक्तातिवत्सलोऽव्यक्तस्सुव्यक्तस्सुलभश्शुचिः ॥ ९॥

लोकैकनायकस्सर्वश्शरणागतवत्सलः ।
धीरो धरश्च सर्वज्ञो भीमो भीमपराक्रमः ॥ १०॥

देवप्रियो नुतः पूज्यो भवहृत् परमेश्वरः ।
श्रीवत्सवक्षाः श्रीवासो विभुस्सङ्कर्षणः प्रभुः ॥ ११॥

त्रिविक्रमस्त्रिलोकात्मा कामस्सर्वेश्वरेश्वरः ।

विश्वंभरः स्थिराभश्चाऽच्युतः पुरुषोत्तमः ॥ १२॥

अधोक्षजोऽक्षयस्सेव्यो वनमाली प्रकंपनः ।
गुरुर्लोकगुरुस्स्रष्टा परंज्योतिः परायणः ॥ १३॥

ज्वालाहोबिलमालोल-क्रोडाकारञ्जभार्गवाः ।
योगनन्दश्चत्रवटः पावनो नवमूर्तयः ॥ १४॥

॥ श्री नृसिंहाष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥

॥ श्रीः ॥

। रुद्राद्या ऊचुः ।
ॐ नमो नारसिंहाय तीक्ष्ण-दंष्ट्राय ते नमः ।
नमो वज्र-नखायैव विष्णवे जिष्णवे नमः ॥ १॥

सर्वबीजाय सत्याय सर्वचैतन्य-रूपिणे ।
सर्वाधाराय सर्वस्मै सर्वगाय नमो नमः ॥ २॥

विश्वस्मै विश्ववन्द्याय विरिञ्चि-जनकाय च ।
वागीश्वराय वेद्याय वेधसे वेदमौलये ॥ ३॥

नमो रुद्राय भद्राय मङ्गलाय महात्मने ।
करुणाय तुरीयाय शिवाय परमात्मने ॥ ४॥

हिरण्यकशिपु-प्राण-हरणाय नमो नमः ।
प्रह्लाद-ध्यायमानाय प्रह्लादार्ति-हराय च ॥ ५॥

प्रह्लाद-स्थिरसाम्राज्य-दायकाय नमो नमः ।
दैत्य-वक्षोविदलन-व्यग्र-वज्रनखाय च ॥ ६॥

आन्त्रमाला-विभूषाय महारौद्राय ते नमः ।
नम उग्राय वीराय ज्वलते भीषणाय च ॥ ७॥

सर्वतोमुख-दुर्वार-तेजो-विक्रमशालिने ।
नरसिंहाय रौद्राय नमस्ते मृत्युमृत्यवे ॥ ८॥

मत्स्याद्यनन्त-कल्याण-लीला-वैभवकारिणे ।
नमो व्यूहचतुष्काय दिव्यार्चा-रूपधारिणे ॥ ९॥

परस्मै पाञ्चजन्यादि-पञ्च-दिव्यायुधाय च ।
त्रिसाम्ने च त्रिधाम्ने च त्रिगुणातीत-मूर्तये ॥ १०॥

योगारूढाय लक्ष्याय मायातीताय मायिने ।
मन्त्रराजाय दुर्दोष-शमनायेष्टदाय च ॥ ११॥

नमः किरीट-हारादि-दिव्याभरण-धारिणे ।
सर्वालङ्कार-युक्ताय लक्ष्मीलोलाय ते नमः ॥ १२॥

आकण्ठ-हरिरूपाय चाकण्ठ-नररूपिणे ।
चित्राय चित्ररूपाय जगच्चित्रतराय च ॥ १३॥

सर्व-वेदान्त-सिद्धान्त-सारसत्तमयाय च ।
सर्व-मन्त्राधिदेवाय स्तम्भ-डिम्भाय शंभवे ॥ १४॥

नमोऽस्त्वनन्त-कल्याणगुण-रत्नाकराय च ।
भगवच्छब्द-वाच्याय वागतीताय ते नमः ॥ १५॥

कालरूपाय कल्याय सर्वज्ञायाघहारिणे ।
गुरवे सर्वसत्कर्म-फलदाय नमो नमः ॥ १६॥

अशेष-दोषदूराय सुवर्णायात्मदर्शिने ।
वैकुण्ठपद-नाथाय नमो नारायणाय च ॥ १७॥

केशवादि-चतुर्विंशत्यवतार-स्वरूपिणे ।
जीवेशाय स्वतन्त्राय मृगेन्द्राय नमो नमः ॥ १८॥

बह्मराक्षस-भूतादि-नानाभय-विनाशिने ।
अखण्डानन्द-रूपाय नमस्ते मन्त्रमूर्तये ॥ १९॥

सिद्धये सिद्धिबीजाय सर्वदेवात्मकाय च ।
सर्व-प्रपञ्च-जन्मादि-निमित्ताय नमो नमः ॥ २०॥

शङ्कराय शरण्याय नमस्ते शास्त्रयोनये ।
ज्योतिषे जीवरूपाय निर्भेदाय नमो नमः ॥ २१॥

नित्यभागवताराध्य सत्यलीला-विभूतये ।
नरकेसरिताव्यक्त-सदसन्मय-मूर्तये ॥ २२॥

सत्तामात्र-स्वरूपाय स्वाधिष्ठानात्मकाय च ।
संशयग्रन्थि-भेदाय सम्यग्ज्ञान-स्वरूपिणे ॥ २३॥

सर्वोत्तमोत्तमेशाय पुराण-पुरुषाय च ।
पुरुषोत्तमरूपाय साष्टाङ्गं प्रणतोऽस्म्यहम् ॥ २४॥

नाम्नामष्टोत्तरशतं श्रीनृसिंहस्य यः पटेत् ।
सर्वपाप-विनिर्मुक्तः सर्वेष्टार्थानवाप्नुयात् ॥ २५॥

॥ इति श्रीब्रह्माण्डपुराणे नृसिंहाष्टोत्तर-शतनाम-स्तोत्रं संपूर्णम् ॥